# .. Shri Mahakalabhairava Kavacham ..

# ॥ श्रीमहाकालभैरवकवचम् ॥

## Sanskrit Document Information

Text title : mahAkAlabhairavakavacham

File name : mahAkAlabhairavakavacham.itx

Category : kavacha, shiva

Location : doc_shiva

Author : Traditional

Language : Sanskrit

Subject : philosophy/hinduism/religion

Transliterated by : Pranav Tendulkar pranav.tendulkar at gmail.com

Proofread by : Pranav Tendulkar pranav.tendulkar at gmail.com, NA

Latest update : February 19, 2017

Send corrections to : Sanskrit@cheerful.com

Site access : http://sanskritdocuments.org



August 20, 2017

*sanskritdocuments.org*

# ॥ श्रीमहाकालभैरवकवचम् ॥

श्रीदेव्युवाच ।
देवदेव महाबाहो भक्तानां सुखवर्धन ।
केन सिद्धिं ददात्याशु काली त्रैलोक्यमोहन ॥ १॥

तन्मे वद दयाऽऽधार साधकाभीष्टसिद्धये ।
कृपां कुरु जगन्नाथ वद वेदविदां वर ॥ २॥

श्रीभैरव उवाच ।
गोपनीयं प्रयत्नेन तत्त्वात् तत्त्वं परात्परम् ।
एष सिद्धिकरः सम्यक् किमथो कथयाम्यहम् ॥ ३॥

महाकालमहम् वन्दे सर्वसिद्धिप्रदायकम् ।
देवदानवगन्धर्वकिन्नरपरिसेवितम् ॥ ४॥

कवचं तत्त्वदेवस्य पठनाद् घोरदर्शने ।
सत्यं भवति सान्निध्यं कवचस्तवनान्तरात् ॥ ५॥

सिद्धिं ददाति सा तुष्टा कृत्वा कवचमुत्तमम् ।
साम्राज्यत्वं प्रियं दत्वा पुत्रवत् परिपालयेत् ॥ ६॥

कवचस्य ऋषिर्देवी कालिका दक्षिणा तथा
विराड्छन्दः सुविज्ञेयं महाकालस्तु देवता ।
कालिका साधने चैव विनियोगः प्रकीर्त्तितः ॥ ७॥

ॐ श्मशानस्थो महारुद्रो महाकालो दिगम्बरः ।
कपालकर्तृका वामे शूलं खट्वाङ्गम् दक्षिणे ॥ ८॥

भुजङ्गभूषिते देवि भस्मास्थिमणिमण्डितः ।
ज्वलत्पावकमध्यस्थो भस्मशय्याव्यवस्थितः ॥ ९॥

विपरीतरतां तत्र कालिकां हृदयोपरि ।
पेयं खाद्यं च चोष्यं च तौ कृत्वा तु परस्परम् ।
एवं भक्त्या यजेद् देवं सर्वसिद्धिः प्रजायते ॥ १०॥

प्रणवं पूर्वमुच्चार्य महाकालाय तत्पदम् ।
नमः पातु महामन्त्रः सर्वशास्त्रार्थपारगः ॥ ११॥

अष्टक्षरो महा मन्त्रः सर्वाशापरिपूरकः ।
सर्वपापक्षयं याति ग्रहणे भक्तवत्सले ॥ १२॥

कूर्चद्वन्द्वं महाकाल प्रसीदेति पदद्वयम् ।
लज्जायुग्मं वह्निजाया स तु राजेश्वरो महान् ॥ १३॥

मन्त्रग्रहणमात्रेण भवेत सत्यं महाकविः ।
गद्यपद्यमयी वाणी गङ्गानिर्झरिता तथा ॥ १४॥

तस्य नाम तु देवेशि देवा गायन्ति भावुकाः ।
शक्तिबीजद्वयं दत्वा कूर्चं स्यात् तदनन्तरम् ॥ १५॥

महाकालपदं दत्वा मायाबीजयुगं तथा ।
कूर्चमेकं समुद्धृत्य महामन्त्रो दशाक्षरः ॥ १६॥

राजस्थाने दुर्गमे च पातु मां सर्वतो मुदा ।
वेदादिबीजमादाय भगमान् तदनन्तरम् ॥ १७॥

महाकालाय सम्प्रोच्य कूर्चं दत्वा च ठद्वयम् ।
ह्रींकारपूर्वमुद्धृत्य वेदादिस्तदनन्तरम् ॥ १८॥

महाकालस्यान्तभागे स्वाहान्तमनुमुत्तमम् ।
धनं पुत्रं सदा पातु बन्धुदारानिकेतनम् ॥ १९॥

पिङ्गलाक्षो मञ्जुयुद्धे युद्धे नित्यं जयप्रदः ।
सम्भाव्यः सर्वदुष्टघ्नः पातु स्वस्थानवल्लभः ॥ २०॥

इति ते कथितं तुभ्यं देवानामपि दुर्लभम् ।
अनेन पठनाद् देवि विघ्ननाशो यथा भवेत् ॥ २१॥

सम्पूजकः शुचिस्नातः भक्तियुक्तः समाहितः ।
सर्वव्याधिविनिर्मुक्तः वैरिमध्ये विशेषतः ॥ २२॥

महाभीमः सदा पातु सर्वस्थान वल्लभम् । ?
कालीपार्श्वस्थितो देवः सर्वदा पातु मे मुखे ॥ २३॥

॥ फल श्रुति॥

पठनात् कालिकादेवी पठेत् कवचमुत्तमम् ।
श्रुणुयाद् वा प्रयत्नेन सदाऽऽनन्दमयो भवेत् ॥ १॥

श्रद्धयाऽश्रद्धया वापि पठनात् कवचस्य यत् ।
सर्वसिद्धिमवाप्नोति यद्यन्मनसि वर्तते ॥ २॥

बिल्वमूले पठेद् यस्तु पठनाद् कवचस्य यत् ।
त्रिसन्ध्यं पठनाद् देवि भवेन्नित्यं महाकविः ॥ ३॥

कुमारीं पूजयित्वा तु यः पठेद् भावतत्परः ।
न किञ्चिद् दुर्लभं तस्य दिवि वा भुवि मोदते ॥ ४॥

दुर्भिक्षे राजपीडायां ग्रामे वा वैरिमध्यके ।
यत्र यत्र भयं प्राप्तः सर्वत्र प्रपठेन्नरः ॥ ५॥

तत्र तत्राभयं तस्य भवत्येव न संशयः ।
वामपार्श्वे समानीय शोभितां वरकामिनीम् ॥ ६॥

श्रद्धयाऽश्रद्धया वापि पठनात् कवचस्य तु ।
प्रयत्नतः पठेद् यस्तु तस्य सिद्धिः करे स्थिता ॥ ७॥

इदं कवचमज्ञात्वा कालं यो भजते नरः ।
नैव सिद्धिर्भवेत् तस्य विघ्नस्तस्य पदे पदे ।
आदौ वर्म पठित्वा तु तस्य सिद्धिर्भविष्यति ॥ ८॥

।
॥ इति रुद्रयामले महातन्त्रे महाकालभैरवकवचं सम्पूर्णम्॥

Encoded and proofread by Pranav Tendulkar pranav.tendulkar at gmail.com, NA

.. Shri Mahakalabhairava Kavacham ..
Searchable pdf was typeset using XeTeXgenerateactualtext feature of XƎLaTeX 0.99996
on August 20, 2017

Please send corrections to *sanskrit@cheerful.com*